दीर्घवर्त्मपरिश्रान्तं नद्यद्रिवनसंकुलम् ।
घोराग्निभयसंत्रस्तं क्षुत्पिपासार्दितं तथा ॥ १०८ ॥
प्रमत्तं भोजनव्यग्रं व्याधिदुर्भिक्षपीडितम् ।
असंस्थितमभूयिष्ठं वृष्टिवातसमाकुलम् ॥ १०९ ॥
पङ्कपांशुजलाच्छन्नं सुव्यस्तं दस्युविद्रुतम् ।
एवंभूतं महीपालः परसैन्यं विघातयेत् ॥ ११० ॥

अन्यच्च,–

अवस्कन्दभयाद्राजा प्रजागरकृतश्रमम् ।
दिवासुप्तं [2]संहन्यान्निद्राव्याकुलसैनिकम्' ॥ १११ ॥

अतस्तस्य प्रमादिनो बलं गत्वा यथावकाशं दिवानिशं घ्नन्त्वस्मत्सेनापतयः । तथाऽनुष्ठिते चित्रवर्णस्य सैनिकाः सेनापतयश्च बहवो निहताः । ततश्चित्रवर्णो विषण्णः स्वमन्त्रिणं दूरदर्शिनमाह–'तात ! किमित्यस्मदुपेक्षा क्रियते ? किं वा काप्यविनयो ममास्ति ? तथा चोक्तम्,–

न राज्यं प्राप्तमित्येव वर्तितव्यमसांप्रतम् ।
श्रियं ह्यविनयो हन्ति जरा रूपमिवोत्तमम् ॥ ११२ ॥

अपि च,–

दक्षः श्रियमधिगच्छति पथ्याशी कल्यतां सुखमरोगी ।
[3]उद्युक्तो विद्यान्तं धर्मार्थयशांसि च विनीतः' ॥ ११३ ॥

गृध्रोऽवदत्–'देव ! शृणु,–

अविद्वानपि भूपालो विद्यावृद्धोपसेवया ।
परां श्रियमवाप्नोति जलासन्नतरुर्यथा ॥ ११४ ॥

अन्यच्च,–

पानं स्त्री मृगया द्यूतमर्थदूषणमेव च ।
वाग्दण्डयोश्च पारुष्यं व्यसनानि महीभुजाम् ॥ ११५ ॥

किं च,–

न साहसैकान्तरसानुवर्तिना
न वाप्युपायोपहतान्तरात्मना ।

पाठा०- १ पिपासाहितक्लमम्. २ सदा हन्यात्. ३ उद्योगी.

विभूतयः शक्यमवाप्तुमूर्जिता
नये च शौर्ये च वसन्ति संपदः ॥ ११६ ॥

त्वया स्वबलोत्साहमवलोक्य साहसैकवासिना मयोपन्यस्तेष्वपि मन्त्रेष्वनवधानं वाक्पारुष्यं च कृतम् । अतो दुर्नीतेः फलमिदमनुभूयते । तथा चोक्तम्,–

दुर्मन्त्रिणं कमुपयान्ति न नीतिदोषाः
संतापयन्ति कमपथ्यभुजं न रोगाः ? ।
कं श्रीर्न दर्पयति कं न निहन्ति मृत्युः
कं स्त्रीकृता न विषयाः परितापयन्ति ? ॥ ११७ ॥

अपरं च,–

मुदं विषादः शरदं हिमागम-
स्तमो विवस्वान् सुकृतं कृतघ्नता ।
प्रियोपपत्तिः शुचमापदं नयः
श्रियः समृद्धा अपि हन्ति दुर्नयः' ॥ ११८ ॥

ततो मयाप्यालोचितम्–'प्रज्ञाहीनोऽयं राजा । नो चेत्कथं नीतिशास्त्रकथाकौमुदीं वागुल्काभिस्तिमिरयति ? यतः,–

यस्य नास्ति स्वयं प्रज्ञा शास्त्रं तस्य करोति किम् ।
लोचनाभ्यां विहीनस्य दर्पणः किं करिष्यति ?' ॥ ११९ ॥

इत्यालोच्य तूष्णीं स्थितः । अथ राजा बद्धाञ्जलिराह–'तात ! अस्त्ययं ममापराधः । इदानीं यथावशिष्टबलसहितः प्रत्यावृत्य विन्ध्याचलं गच्छामि तथोपदिश ।' गृध्रः स्वगतं चिन्तयति–'क्रियतामत्र प्रतीकारः । यतः,–

देवतासु गुरौ गोषु राजसु ब्राह्मणेषु च ।
नियन्तव्यः सदा कोपो बालवृद्धातुरेषु च' ॥ १२० ॥

मन्त्री प्रहस्य ब्रूते –'देव ! मा भैषीः; समाश्वसिहि । शृणु देव !

पाठा०– १ श्रियं समृद्धामपि.

मन्त्रिणां भिन्नसंधाने भिषजां सांनिपातिके ।
कर्मणि व्यज्यते प्रज्ञा, सुस्थे को वा न पण्डितः ? ॥१२१॥

अपरं च,—

[1]आरभन्तेऽल्पमेवाज्ञाः कामं व्यग्रा भवन्ति च ।
महारम्भाः कृतधियस्तिष्ठन्ति च निराकुलाः ॥ १२२ ॥

तदत्र भवत्प्रतापादेव दुर्गं भङ्क्त्वा कीर्तिप्रतापसहितं त्वामचिरेणैव कालेन विन्ध्याचलं नेष्यामि' । राजाह—'कथमधुना स्वल्पबलेन तत्संपद्यते ?' । गृध्रो वदति—'देव ! सर्वं भविष्यति । यतो विजिगीषोरदीर्घसूत्रता विजयसिद्धेरवश्यंभावि लक्षणम् । तत्सहसैव दुर्गावरोधः क्रियताम्' ।

प्रहितप्रणिधिना बकेनागत्य हिरण्यगर्भस्य तत्कथितम्—'देव ! स्वल्पबल एवायं राजा चित्रवर्णो गृध्रस्य मन्त्रोपस्तम्भेन दुर्गावरोधं करिष्यति' । राजाह—'सर्वज्ञ ! किमधुना विधेयम् ?' । चक्रवाको ब्रूते—'स्वबले सारासारविचारः क्रियताम्' । तज्ज्ञात्वा सुवर्णवस्त्रादिकं यथार्हं प्रसादप्रदानं च क्रियताम् । यतः,—

यः काकिनीमप्यपथप्रपन्नां
समुद्धरेन्निष्कसहस्रतुल्याम् ।
कालेषु कोटिष्वपि मुक्तहस्त-
स्तं राजसिंहं न जहाति लक्ष्मीः ॥ १२३ ॥

अन्यच्च,—

ऋतौ विवाहे व्यसने रिपुक्षये
यशस्करे कर्मणि मित्रसंग्रहे ।
प्रियासु नारीष्वधनेषु बान्धवे-
ष्वतिव्ययो नास्ति नराधिपाष्टसु ॥ १२४ ॥

पाठा०- १ अल्पारंभेऽप्यल्पधियः.

यतः,–

मूर्खः स्वल्पव्ययत्रासात् सर्वनाशं करोति हि ।
कः सुधीः संत्यजेद्भाण्डं शुल्कस्यैवातिसाध्वसात्' ॥१२५॥

राजाह—'कथमिह समयेऽतिव्ययो युज्यते ? । उक्तं च—"आपदर्थे धनं रक्षेत्" इति ।' मन्त्री ब्रूते—'श्रीमतः कुत आपदः ?' । राजाह—'कदाचिच्चलते लक्ष्मीः' । मन्त्री ब्रूते—'संचितार्थो विनश्यति' । तद्देव ! कार्पण्यं विमुच्य दानमानाभ्यां स्वभटाः पुरस्क्रियन्ताम् । तथा चोक्तम्,–

परस्परज्ञाः संहृष्टास्त्यक्तुं प्राणान् सुनिश्चिताः ।
कुलीनाः पूजिताः सम्यग्विजयन्ते द्विषद्बलम् ॥ १२६ ॥

अपरं च,–

सुभटाः शीलसंपन्नाः संहताः कृतनिश्चयाः ।
अपि पञ्चशतं शूरा निघ्नन्ति रिपुवाहिनीम् ॥ १२७ ॥

किं च,–

शिष्टैरप्यविशेषज्ञ उदग्रः कृतनाशकः ।
त्यज्यते किं पुनर्नान्यैर्यश्चाप्यात्मंभरिर्नरः ॥ १२८ ॥

यतः,–

सत्यं शौर्यं दया त्यागो नृपस्यैते महागुणाः ।
एभिस्त्यक्तो महीपालः प्राप्नोति खलु वाच्यताम् ॥१२९॥

ईदृशि प्रस्तावेऽमात्यास्तावदेव पुरस्कर्तव्याः । तथा चोक्तम्,–

यो येन प्रतिबद्धः स्यात्सह तेनोदयी व्ययी ।
सुविश्वस्तो नियोक्तव्यः प्राणेषु च धनेषु च ॥ १३० ॥

यतः,–

धूर्तः स्त्री वा शिशुर्यस्य मन्त्रिणः स्युर्महीपतेः ।
अनीतिपवनक्षिप्तः कार्याब्धौ स निमज्जति ॥ १३१ ॥

शृणु देव !

हर्षक्रोधौ समौ यस्य शास्त्रार्थे प्रत्ययस्तथा ।
नित्यं भृत्यान्ववेक्षा च तस्य स्याद्धनदा धरा ॥ १३२ ॥

पाठा०- १ हर्षक्रोधौ यतौ यस्य कोषः स्वल्पव्ययेन च. २ नित्यं भृत्यानुपेक्षा च.

येषां राज्ञा सह स्यातामुच्चयापचयौ ध्रुवम् ।
अमात्या इति तान् राजा नावमन्येत् कदाचन ॥ १३३ ॥

यतः,—

महीभुजो मदान्धस्य 'संकीर्णस्येव दन्तिनः ।
स्खलतो हि करालम्बः सुहृत्सचिवचेष्टितम्' ॥ १३४ ॥

अथागत्य प्रणम्य मेघवर्णो ब्रूते—'देव ! दृष्टिप्रसादं कुरु । इदानीं विपक्षो दुर्गद्वारि वर्तते, तद्देवपादादेशाद्बहिर्निःसृत्य स्वविक्रमं दर्शयामि । तेन देवपादानामानृण्यमुपगच्छामि' । चक्रवाको ब्रूते—'मैवम्; यदि बहिर्निःसृत्य योद्धव्यं तदा दुर्गाश्रयणमेव निष्प्रयोजनम् । अपरं च,—

विषमोऽपि यथा नक्रः सलिलान्निर्गतोऽवशः ।
वनाद्विनिर्गतः शूरः सिंहोऽपि स्याच्छृगालवत् ॥ १३५ ॥

देव ! स्वयं गत्वा दृश्यतां युद्धम् । यतः,—

पुरस्कृत्य बलं राजा योधयेदवलोकयन् ।
स्वामिनाऽधिष्ठितः श्वापि किं न सिंहायते ध्रुवम् !' ॥१३६॥

अथ ते सर्वे दुर्गद्वारं गत्वा महाहवं कृतवन्तः । अपरेद्युश्चित्रवर्णो राजा गृध्रमुवाच—'तात ! स्वप्रतिज्ञातमनुना निर्वाहय' । गृध्रो ब्रूते—'देव ! शृणु तावत्,—

अकालसहमत्यल्पं मूर्खव्यसनिनायकम् ।
अगुप्तं भीरुयोधं च दुर्गव्यसनमुच्यते ॥ १३७ ॥

तत्तावदत्र नास्ति,—

उपजापश्चिरारोधोऽवस्कन्दस्तीव्रपौरुषम् ।
दुर्गस्य लङ्घनोपायाश्चत्वारः कथिता इमे ॥ १३८ ॥

अत्र यथाशक्ति क्रियते यत्नः' (कर्णे कथयति ।) 'एवमेवम्' । ततोऽनुदित एव भास्करे चतुर्ष्वपि दुर्गद्वारेषु वृत्ते युद्धे दुर्गाभ्यन्तरगृहेष्वेकदा काकैरग्निर्निक्षिप्तः । ततः 'गृहीतं गृहीतं दुर्गम्' इति

पाठा०– १ मज्जतः कार्यसागरे. २ स्थलतो हि करालम्बः. ३ वनात् प्रच्युतः सिंहः.

कोलाहलं श्रुत्वा सर्वतः प्रदीप्ताग्निमवलोक्य राजहंससैनिका दुर्गवासिनश्च सत्वरं ह्रदं प्रविष्टाः । यतः,–

सुमन्त्रितं सुविक्रान्तं सुयुद्धं सुपलायितम् ।
कार्यकाले यथाशक्ति कुर्यान्न तु विचारयेत् ॥ १३९ ॥

राजहंसः [1]स्वभावान्मन्दगतिः सारसद्वितीयश्च चित्रवर्णस्य सेनापतिना कुक्कुटेनागत्य वेष्टितः । हिरण्यगर्भः सारसमाह—'सारस सेनापते ! ममानुरोधादात्मानं कथं व्यापादयिष्यसि ? त्वमधुना गन्तुं शक्तः । तद्गत्वा जलं प्रविश्यात्मानं परिरक्ष । अस्मत्पुत्रं चूडामणिनामानं सर्वज्ञसंमत्या राजानं करिष्यसि' । सारसो ब्रूते— 'देव ! न वक्तव्यमेवं [2]दुःसहं वचः । यावच्चन्द्रार्कौ दिवि तिष्ठतस्तावद्विजयतां देवः । अहं देव ! दुर्गाधिकारी । मन्मांसासृग्विलिप्तेन द्वारवर्त्मना प्रविशतु शत्रुः । अपरं च,–

दाता क्षमी गुणग्राही स्वामी भाग्येन लभ्यते ।'

राजाह— 'सत्यमेवैतत् किंतु,–

शुचिर्दक्षोऽनुरक्तश्च [3]जाने भृत्योऽपि दुर्लभः' ॥ १४० ॥

सारसो ब्रूते— 'शृणु देव !

यदि समरमपास्य नास्ति मृत्यो-
भर्यमिति युक्तमितोऽन्यतः प्रयातुम् ।
अथ मरणमवश्यमेव जन्तोः
किमिति मुधा मलिनं यशः क्रियेत ? ॥ १४१ ॥

अन्यच्च,–

भवेऽस्मिन् पवनोद्भ्रान्तवीचिविभ्रमभङ्गुरे ।
जायते पुण्ययोगेन परार्थे जीवितव्ययः ॥ १४२ ॥

स्वाम्यमात्यश्च राष्ट्रं च दुर्गं कोशो बलं सुहृत् ।
राज्याङ्गानि प्रकृतयः पौराणां श्रेणयोऽपि च ॥ १४३ ॥

देव ! त्वं च स्वामी सर्वथा रक्षणीयः । यतः,–

प्रकृतिः [4]स्वामिनं त्यक्त्वा समृद्धापि न जीवति ।
अपि धन्वन्तरिर्वैद्यः किं करोति गतायुषि ? ॥ १४४ ॥

---

पाठा०–१ सुखिस्वभावात्. २ दुःखेन. ३ मृत्यः खलु सुदुर्लभः. ४ स्वामिना त्यक्ता.

अपरं च,–

'नरेशे जीवलोकोऽयं निमीलति निमीलति ।
उदेत्युदीयमाने च रवाविव सरोरुहम्' ॥ १४५ ॥

अथ कुक्कुटेनागत्य राजहंसस्य शरीरे खरतरनखाघातः कृतः। तदा सत्वरमुपसृत्य सारसेन स्वदेहान्तरितो राजा जले क्षिप्तः । अथ कुक्कुटैर्नखमुखप्रहारैर्जर्जरीकृतेन सारसेन कुक्कुटसेना बहुशो हता:। पश्चात् सारसोऽपि चञ्चुप्रहारेण विभिद्य व्यापादितः । अथ चित्रवर्णो दुर्गं प्रविश्य दुर्गावस्थितं द्रव्यं ग्राहयित्वा बन्दिभिर्जशयब्दैरानन्दितः स्वस्कन्धावारं जगाम ॥

अथ राजपुत्रैरुक्तम्— 'तस्मिन्राजबले स पुण्यवान् सारस एव, येन स्वदेहत्यागेन स्वामी रक्षितः । उक्तं चैतत्,–

जनयन्ति सुतान् गावः सर्वा एव गवाकृतीन् ।
विषाणोल्लिखितस्कन्धं काचिदेव[1] गवां पतिम्' ॥ १४६ ॥

विष्णुशर्मोवाच— 'स तावद्विद्याधरीपरिजनः स्वर्गसुखमनुभवतु महासत्त्वः । तथा चोक्तम्,–

आहवेषु च ये शूराः स्वाम्यर्थे त्यक्तजीविताः ।
भर्तृभक्ताः कृतज्ञाश्च ते नराः स्वर्गगामिनः ॥ १४७ ॥
यत्र तत्र हतः शूरः शत्रुभिः परिवेष्टितः ।
अक्षयाँल्लभते लोकान् यदि क्लैब्यं न गच्छति ॥ १४८ ॥

विग्रहः श्रुतो भवद्भिः ?' राजपुत्रैरुक्तम्,–'श्रुत्वा सुखिनो भूता वयम्' । विष्णुशर्माऽब्रवीत्—अपरमप्येवमस्तु,–

विग्रहः करितुरङ्गपत्तिभि-
र्नो कदापि भवतां महीभुजाम् ।
नीतिमन्त्रपवनैः सं[2]हताः
संश्रयन्तु गिरिगह्वरं द्विषः' ॥ १४९ ॥

इति हितोपदेशे विग्रहो नाम तृतीयः कथासंग्रहः समाप्तः ।

---

पाठा०- १ कश्चिदेव. २ समाहताः.

# संधिः ।

पुनः कथारम्भकाले राजपुत्रैरुक्तम्—'आर्य ! विग्रहः श्रुतोऽस्माभिः; संधिरधुनाऽभिधीयताम्' । विष्णुशर्मणोक्तम्—'श्रूयताम्; संधिमपि कथयामि । यस्यायमाद्यः श्लोकः,–

वृत्ते महति सङ्ग्रामे राज्ञोर्निहतसेनयोः ।
स्थेयाभ्यां गृध्रचक्राभ्यां वाचा संधिः कृतः क्षणात्' ॥ १ ॥

राजपुत्रा ऊचुः—'कथमेतत् ?'। विष्णुशर्मा कथयति,–

ततस्तेन राजहंसेनोक्तम्—'केनास्मद्दुर्गे निक्षिप्तोऽग्निः ? किं पारक्येण किंवास्मद्दुर्गवासिना केनापि विपक्षप्रयुक्तेन ?' । चक्रवाको ब्रूते—'देव ! भवतो निष्कारणबन्धुरसौ मेघवर्णः सपरिवारो न दृश्यते । तन्मन्ये तस्यैव विचेष्टितमिदम्' । राजा क्षणं विचिन्त्याह—'अस्ति तावदेव मम दुर्दैवमेतत् । तथा चोक्तम्,–

अपराधः स दैवस्य न पुनर्मन्त्रिणामयम् ।
कार्यं सुचरितं क्वापि दैवयोगाद्विनश्यति' ॥ २ ॥

मन्त्री ब्रूते–'उक्तमेवैतत्,—

विषमां हि दशां प्राप्य दैवं गर्हयते नरः ।
आत्मनः कर्मदोषांश्च नैव जानात्यपण्डितः ॥ ३ ॥

अपरं च,–

सुहृदां हितकामानां यो वाक्यं नाभिनन्दति ।
स कूर्म इव दुर्बुद्धिः काष्ठाद्भ्रष्टो विनश्यति ॥ ४ ॥

अन्यच्च,–

रक्षितव्यं सदा वाक्यं वाक्याद्भवति नाशनम् ।
हंसाभ्यां नीयमानस्य कूर्मस्य पतनं यथा" ॥ ५ ॥

राजाह—'कथमेतत् ?' । मन्त्री कथयति,–

पाठा०–१ सुघटितं यत्नाद्.

## [ सुहृद्वाक्यानभिनन्दने हंस-मयूर-कूर्मकथा १ ]

"अस्ति मगधदेशे फुल्लोत्पलाभिधानं सरः । तत्र चिरात् संकट-विकटनामानौ हंसौ निवसतः । तयोर्मित्रं कम्बुग्रीवनामा कूर्मश्च प्रतिवसति । अथैकदा धीवरैरागत्य तत्रोक्तम् —'यदत्रास्माभिरद्योषित्वा प्रातर्मत्स्यकूर्मादयो व्यापादयितव्याः' । तदाकर्ण्य कूर्मो हंसावाह—'सुहृदौ ! श्रुतोऽयं धीवरालापः ? अधुना किं मया कर्तव्यम् ?' । हंसावाहतुः—'ज्ञायताम् । पुनस्तावत्प्रातर्यदुचितं तत्कर्तव्यम्' । कूर्मो ब्रूते—'मैवम् ; यतो दृष्टव्यतिकरोऽहमत्र । तथा चोक्तम्,—

अनागतविधाता च प्रत्युत्पन्नमतिस्तथा ।
द्वावेतौ सुखमेधेते यद्भविष्यो विनश्यति' ॥ ६ ॥

तावाहतुः— 'कथमेतत् ?' । कूर्मः कथयति,—

## [ समयानुकूलानुष्ठाने मत्स्यत्रयकथा २ ]

"पुराऽस्मिन्नेव सरस्येवंविधेषु धीवरेषूपस्थितेषु मत्स्यत्रयेणालोचितम् । तत्रानागतविधाता नामैको मत्स्यः । तेनालोचितम्— 'अहं तावज्जलाशयान्तरं गच्छामि' इत्युक्त्वा ह्रदान्तरं गतः । अपरेण प्रत्युत्पन्नमतिनाम्ना मत्स्येनाभिहितम्— 'भविष्यदर्थे प्रमाणाभावात्कुत्र मया गन्तव्यम् ? तदुत्पन्ने यथाकार्यं तदनुष्ठेयम् । तथा चोक्तम्,—

उत्पन्नामापदं यस्तु समाधत्ते स बुद्धिमान् ।
वणिजो भार्यया जारः प्रत्यक्षे निह्नुतो यथा' ॥ ७ ॥

यद्भविष्यः पृच्छति— 'कथमेतत् ?' । प्रत्युत्पन्नमतिः कथयति,—

## [ प्रत्यक्षनिह्नवे वणिक्-भार्या-जारकथा ३ ]

"पुरा विक्रमपुरे समुद्रदत्तो नाम वणिगस्ति । तस्य रत्नप्रभा नाम गृहिणी स्वसेवकेन सह सदा रमते । अथैकदा सा रत्नप्रभा तस्य सेवकस्य मुखे चुम्बनं ददती समुद्रदत्तेनावलोकिता । ततः सा बन्धकी सत्वरं भर्तुः समीपमागत्योवाच — 'नाथ ! एतस्य सेवकस्य

महती निर्वृतिः । यतोऽयं चौरिकां कृत्वा कर्पूरं खादतीति मयास्य मुखमाघ्राय ज्ञातम् । तथा चोक्तम्—'आहारो द्विगुणः स्त्रीणाम्' इत्यादि । तच्छ्रुत्वा सेवकेनापि प्रकुप्योक्तम्—'यस्य स्वामिनो गृह एतादृशी भार्या तत्र सेवकेन कथं स्थातव्यं ? यत्र प्रतिक्षणं गृहिणी सेवकस्य मुखं जिघ्रति' । ततोऽसावुत्थाय चलितः साधुना यत्नात्प्रबोध्य धृतः । अतोऽहं ब्रवीमि—"उत्पन्नामापदम्" इत्यादि ॥ ततो यद्भविष्येणोक्तम्,—)

'यदभावि न तद्भावि भावि चेन्न तदन्यथा ।
इति चिन्ताविषघ्नोऽयमगदः किं न पीयते ?' ॥ ८ ॥

ततः प्रातर्जालेन बद्धः प्रत्युत्पन्नमतिर्मृतवदात्मानं संदर्श्य स्थितः । ततो जालादपसारितो यथाशक्त्युत्प्लुत्य गंभीरं नीरं प्रविष्टः । यद्भविष्यश्च धीवरैः प्राप्तो व्यापादितः । अतोऽहं ब्रवीमि —"अनागतविधाता" इत्यादि । तद्यथाहमन्यह्रदं प्राप्नोमि तथा क्रियताम्' । हंसावाहतुः—'जलाशयान्तरे प्राप्ते तव कुशलम् । स्थले गच्छतस्ते को विधिः ?' । कूर्म आह—'यथाहं भवद्भ्यां सहाकाशवर्त्मना यामि तथा विधीयताम्' । हंसौ ब्रूतः—'कथमुपायः संभवति ?' । कच्छपो वदति—'युवाभ्यां चञ्चुधृतं काष्ठखण्डमेकं मया मुखेनावलम्ब्य गन्तव्यम् । युवयोः पक्षबलेन मयापि सुखेन गन्तव्यम्' । हंसौ ब्रूतः—'संभवत्येष उपायः । किंतु,—

उपायं चिन्तयन् प्राज्ञो ह्यपायमपि चिन्तयेत् ।
पश्यतो बकमूर्खस्य नकुलैर्भक्षिताः प्रजाः' ॥ ९ ॥

कूर्मः पृच्छति—'कथमेतत् ?' । तौ कथयतः,—

## [ उपायापायचिन्तायां बक-सर्प-नकुलकथा ४ ]

"अस्त्युत्तरापथे गृध्रकूटनाम्नि पर्वते महान्पिप्पलवृक्षः । तत्रानेके बका निवसन्ति । तस्य वृक्षस्याधस्ताद्विवरे सर्पस्तिष्ठति । स च बकानां बालापत्यानि खादति । अथ शोकार्तानां बकानां विलापं

श्रुत्वा केनचिद्बकेनाभिहितम्—'एवं कुरुत। यूयं मत्स्यानुपादाय नकुलविवरादारभ्य सर्पविवरं यावत्पङ्क्तिक्रमेण विकिरत। ततस्तदाहारलुब्धैर्नकुलैरागत्य सर्पो द्रष्टव्यः स्वभावद्वेषाद्व्यापादयितव्यश्च'। तथानुष्ठिते तद्वृत्तम्। ततस्तत्र वृक्षे नकुलैर्बकशावकरावः श्रुतः। पश्चात्तैर्वृक्षमारुह्य बकशावकाः खादिताः। अत आवां ब्रूवः—"उपायं चिन्तयन्" इत्यादि॥ आवाभ्यां नीयमानं त्वामवलोक्य लोकैः किंचिद्वक्तव्यमेव। तदाकर्ण्य यदि त्वमुत्तरं दास्यसि तदा त्वन्मरणं भविष्यति। तत्सर्वथात्रैव स्थीयताम्'। कूर्मो वदति—'किमहमप्राज्ञः? नाहमुत्तरं दास्यामि किमपि न वक्तव्यम्'। तथानुष्ठिते तथाविधं कूर्ममालोक्य सर्वे गोरक्षकाः पश्चाद्धावन्ति वदन्ति च। कश्चिद्वदति—'यद्ययं कूर्मः पतति तदात्रैव पक्त्वा खादितव्यः'। कश्चिद्वदति—'अत्रैव दग्ध्वा खादितव्योऽयम्'। कश्चिद्वदति—'गृहं नीत्वा भक्षणीयः' इति। तद्वचनं श्रुत्वा स कूर्मः कोपाविष्टो विस्मृतपूर्वसंस्कारः प्राह—'युष्माभिर्भस्म भक्षितव्यम्'। इति वदन्नेव काष्ठात् पतितस्तैर्व्यापादितश्च। अतोऽहं ब्रवीमि—"सुहृदां हितकामानाम्" इत्यादि॥'

अथ प्रणिधिर्बकस्तत्रागत्योवाच—'देव! प्रागेव मया निगदितम्। दुर्गशोधनं हि प्रतिक्षणं कर्तव्यमिति। तच्च युष्माभिर्न कृतं तदनवधानस्य फलमिदमनुभूतम्। दुर्गदाहो मेघवर्णेन वायसेन गृध्रप्रयुक्तेन कृतः'। राजा निःश्वस्याह,—

प्रणयादुपकाराद्वा यो विश्वसिति शत्रुषु।
स सुप्त इव वृक्षाग्रात् पतितः प्रतिबुध्यते'॥ १०॥

प्रणिधिरुवाच—इतो दुर्गदाहं विधाय यदा गतो मेघवर्णस्तदा चित्रवर्णेन प्रसादितेनोक्तम्—'अयं मेघवर्णोऽत्र कर्पूरद्वीपराज्येऽभिषिच्यताम्। तथा चोक्तम्,—

कृतकृत्यस्य भृत्यस्य कृतं नैव प्रणाशयेत्।
फलेन मनसा वाचा दृष्ट्या चैनं प्रहर्षयेत्'॥ ११॥

चक्रवाको ब्रूते— 'ततस्ततः ?'। प्रणिधिरुवाच—ततः प्रधानमन्त्रिणा गृध्रेणाभिहितम्— 'देव ! नेदमुचितम् । प्रसादान्तरं किमपि क्रियताम् । यतः,–

अविचारयतो[1] युक्तिकथनं तुषखण्डनम् ।
नीचेषूपकृतं राजन् ! वालुकास्विव मुद्रितम् ॥ १२ ॥

महतामास्पदे नीचः कदापि न कर्तव्यः । तथा चोक्तम्,–

नीचः श्लाघ्यपदं प्राप्य स्वामिनं हन्तुमिच्छति[2] ।
मूषिको व्याघ्रतां प्राप्य मुनिं हन्तुं गतो यथा' ॥ १३ ॥

चित्रवर्णः पृच्छति— 'कथमेतत् ?' । मन्त्री कथयति,–

[ नीचस्य महदास्पदप्राप्तौ मुनि-मूषककथा ८ ]

"अस्ति गौतमस्य महर्षेस्तपोवने महातपा नाम मुनिः । तत्र तेन मुनिना काकमुखात् परिभ्रष्टो मूषिकशावको दृष्टः । ततः स्वभावदयात्मना तेन मुनिना नीवारकणैः संवर्धितः । ततो विडालस्तं मूषिकं खादितुमुपधावति । तमवलोक्य मूषिकस्तस्य मुनेः क्रोडे प्रविवेश । ततो मुनिनोक्तम्— 'मूषिक ! त्वं मार्जारो भव' । ततः स विडालः कुक्कुरं दृष्ट्वा पलायते । ततो मुनिनोक्तम्— 'कुक्कुराद्बिभेषि ? । त्वमेव कुक्कुरो भव' । स च कुक्कुरो व्याघ्राद्बिभेति । ततस्तेन मुनिना कुक्कुरो व्याघ्रः कृतः । अथ तं व्याघ्रं मुनिर्मूषिकोऽयमिति पश्यति । अथ तं मुनिं दृष्ट्वा व्याघ्रं सर्वे वदन्ति— 'अनेन मुनिना मूषिकोऽयं व्याघ्रतां नीतः' । एतच्छ्रुत्वा स व्याघ्रोऽचिन्तयत्— 'यावदनेन मुनिना स्थीयते तावदिदं मे स्वरूपाख्यानमकीर्तिकरं न पलायिष्यते' इत्यालोच्य स मुनिं हन्तुं गतः । ततो मुनिना तज्ज्ञात्वा 'पुनर्मूषिको भव' इत्युक्त्वा मूषिक एव कृतः । अतोऽहं ब्रवीमि— "नीचः श्लाघ्यपदम्" इत्यादि ॥ अपरं च, सुकरमिदमिति न मन्तव्यम् । शृणु,–

पाठा०- १ अधिकारेण यो युक्तः कथं तस्यास्ति खण्डनम्. २ लोप्तुमिच्छति.

भक्षयित्वा बहून्मत्स्यानुत्तमाधममध्यमान् ।
अतिलौल्याद्[1]बकः पश्चान्मृतः कर्कटकग्रहात्" ॥ १४ ॥

चित्रवर्णः पृच्छति— 'कथमेतत् ?' । मन्त्री कथयति,—

## [ अतिलौल्ये वृद्धबक-कर्कटक-मत्स्यकथा ६ ]

"अस्ति मालवदेशे पद्मगर्भनामधेयं सरः । तत्रैको वृद्धो बकः सामर्थ्यहीन उद्विग्नमिवात्मानं दर्शयित्वा स्थितः । स च केनचित्कुलीरेण दृष्टः पृष्टश्च— 'किमिति भवानत्राहारत्यागेन तिष्ठति ?' । बकेनोक्तम्— 'मत्स्या मम जीवनहेतवः । ते कैवर्तैरागत्य व्यापादयितव्या इति वार्ता नगरोपान्ते मया श्रुता । अतो वर्तनाभावादेवास्मन्मरणमुपस्थितमिति ज्ञात्वाहारेऽप्यनादरः कृतः' । ततो मत्स्यैरालोचितम्— 'इह समये तावदुपकारक एवायं लक्ष्यते । तदयमेव यथाकर्तव्यं पृच्छ्यताम् । तथा चोक्तम्,—

उपकर्त्रारिणा संधिर्न मित्रेणापकारिणा ।
उपकारापकारौ हि लक्ष्यं लक्षणमेतयोः' ॥ १५ ॥

मत्स्या ऊचुः— 'भो बक ! कोऽत्र रक्षणोपायः ?' । बको ब्रूते— 'अस्ति रक्षणोपायो जलाशयान्तराश्रयणम् । तत्राहमेकैकशो युष्मान्नयामि' । मत्स्या आहुः— 'एवमस्तु' । ततोऽसौ बकस्तान्मत्स्यानेकैकशो नीत्वा खादति । अनन्तरं कुलीरस्तमुवाच— 'भो बक ! मामपि तत्र नय' । ततो बकोऽप्यपूर्वकुलीरमांसार्थी सादरं तं नीत्वा स्थले धृतवान् । कुलीरोऽपि मत्स्यकण्टकाकीर्णं तत्स्थलमालोक्याचिन्तयत्— 'हा ! हतोऽस्मि मन्दभाग्यः । भवतु, इदानीं समयोचितं व्यवहरिष्यामि' इत्यालोच्य कुलीरस्तस्य ग्रीवां चिच्छेद । स बकः पञ्चत्वं गतः । अतोऽहं ब्रवीमि— "भक्षयित्वा बहून्मत्स्यान्" इत्यादि ॥ ततश्चित्रवर्णोऽवदत्— 'शृणु तावन्मन्त्रिन् ! मयैतदालोचितमस्ति । अत्रावस्थितेन मेघवर्णेन राज्ञा यावन्ति वस्तूनि कर्पूरद्वीपस्योत्तमानि तावन्त्यस्माकमुपनेतव्यानि ।

पाठा०— १ अतिलोभात्.

तेनास्माभिर्महासुखेन विन्ध्याचले स्थातव्यम्' । दूरदर्शी विहस्याह— 'देव !

अनागतवतीं चिन्तां कृत्वा यस्तु प्रहृष्यति ।
स तिरस्कारमाप्नोति भग्नभाण्डो द्विजो यथा' ॥ १६ ॥

राजाह— 'कथमेतत् ?' । मन्त्री कथयति,—

## [ अनागतविचारप्रहर्षे ब्राह्मण-कुम्भकारयोः कथा ७ ]

"अस्ति देवीकोटनाम्नि नगरे देवशर्मा नाम ब्राह्मणः । तेन महाविषुवसंक्रान्त्यां सक्तुपूर्णशराव एकः प्राप्तः । तमादायासौ कुम्भकारस्य भाण्डपूर्णमण्डपैकदेशे रौद्रेणाकुलितः सुप्तः । ततः सक्तुरक्षार्थं हस्ते दण्डमेकमादायाचिन्तयत्— 'यद्यहं सक्तुशरावं विक्रीय दश कपर्दकान् प्राप्स्यामि तदात्रैव तैः कपर्दकैर्घटशरावादिकमुपक्रीयानेकधा वृद्धैस्तद्धनैः पुनः पुनः पूगवस्त्रादिकमुपक्रीय विक्रीय लक्षसंख्यानि धनानि कृत्वा विवाहचतुष्टयं करिष्यामि । अनन्तरं तासु सपत्नीषु रूपयौवनवती या तस्यामधिकानुरागं करिष्यामि । सञ्जातेर्ष्यास्ताः सपत्न्यो यदा द्वन्द्वं करिष्यन्ति तदा कोपाकुलोऽहं ता लगुडेन ताडयिष्यामि' इत्यभिधाय लगुडः प्रक्षिप्तः । तेन सक्तुशरावश्चूर्णितो भाण्डानि च बहूनि भग्नानि । ततस्तेन शब्देनागतेन कुम्भकारेण तथाविधानि भाण्डान्यवलोक्य ब्राह्मणस्तिरस्कृतो मण्डपाद्बहिष्कृतश्च" । अतोऽहं ब्रवीमि— "अनागतवतीं चिन्ताम्" इत्यादि ॥

ततो राजा रहसि गृध्रमुवाच— 'तात ! यथा कर्तव्यं तथोपदिश' गृध्रो ब्रूते,—

'मदोद्धतस्य नृपतेः संकीर्णस्येव दन्तिनः ।
गच्छन्त्युन्मार्गयातस्य नेतारः खलु वाच्यताम् ॥ १७ ॥

शृणु देव ! किमस्माभिर्बलदर्पाद्दुर्गं भग्नम् ? न; किंतु तव प्रतापाधिष्ठितेनोपायेन' । राजाह— 'भवतामुपायेन' । गृध्रो ब्रूते— 'यद्यस्मद्वचनं क्रियते तदा स्वदेशे गम्यताम् । अन्यथा वर्षाकाले प्राप्ते

पाठा० – १ गच्छन्त्युन्मार्गया तस्य.

पुनर्विग्रहे सत्यस्माकं परभूमिष्ठानां स्वदेशगमनमपि दुर्लभं भविष्यति। सुखशोभार्थं संधाय गम्यताम् । दुर्गं भग्नं कीर्तिश्च लब्धैव । मम संमतं तावदेतत् । यतः,–

योहि धर्मं पुरस्कृत्य हित्वा भर्तुः प्रियाप्रिये ।
अप्रियाण्याह तथ्यानि तेन राजा सहायवान् ॥ १८ ॥

अन्यच्च,–

सुहृद्बलं तथा राज्यमात्मानं कीर्तिमेव च ।
युधि संदेहदोलास्थं को हि कुर्यादबालिशः ? ॥ १९ ॥

अपरं च,–

संधिमिच्छेत् समेनापि संदिग्धो विजयो युधि ।
सुन्दोपसुन्दावन्योन्यं नष्टौ तुल्यबलौ न किम् ?' ॥ २० ॥

राजोवाच— 'कथमेतत् ?' । मन्त्री कथयति,–

## [ समबलयोर्नाशे सुन्दोपसुन्ददैत्ययोः कथा ८ ]

'पुरा दैत्यौ महोदारौ सुन्दोपसुन्दनामानौ महता क्लेशेन त्रैलोक्यकामनया चिराच्चन्द्रशेखरमाराधितवन्तौ । ततस्तयोर्भगवान् परितुष्टः 'वरं वरयतम्' इत्युवाच । अनन्तरं तयोः समधिष्ठितया सरस्वत्या तावन्यद्वक्तुकामावन्यदभिहितवन्तौ । यद्यावयोर्भगवान् परितुष्टस्तदा स्वप्रियां पार्वतीं परमेश्वरो ददातु । अथ भगवता क्रुद्धेन वरदानस्यावश्यकतया विचारमूढयोः पार्वती प्रदत्ता । ततस्तस्या रूपलावण्यलुब्धाभ्यां जगद्घातिभ्यां मनसोत्सुकाभ्यां पापतिमिराभ्यां ममेत्यन्योन्यकलहाभ्यां प्रमाणपुरुषः कश्चित्पृच्छ्यतामिति मतौ कृतायां स एव भट्टारको वृद्धद्विजरूपः समागत्य तत्रोपस्थितः । अनन्तरम् 'आवाभ्यामियं स्वबललब्धा, कस्येयमावयोर्भवति ?' इति ब्राह्मणमपृच्छताम् । ब्राह्मणो ब्रूते,–

'वर्णश्रेष्ठो द्विजः पूज्यः क्षत्रियो बलवानपि ।
धनधान्याधिको वैश्यः शूद्रस्तु द्विजसेवया ॥ २१ ॥

तद्युवां क्षत्रधर्मानुगौ। युद्ध एव युवयोर्नियमः'। इत्यभिहिते सति 'साधूक्तमनेन' इति कृत्वाऽन्योन्यतुल्यवीर्यौ समकालमन्योन्यघातेन विनाशमुपगतौ। अतोऽहं ब्रवीमि— "संधिमिच्छेत् समेनापि" इत्यादि॥

राजाह— 'प्रागेव किं नोक्तं भवद्भिः?'। मन्त्री ब्रूते— 'मद्वचनं किमवसानपर्यन्तं श्रुतं भवद्भिः?। तदापि मम संमत्या नायं विग्रहारम्भः। साधुगुणयुक्तोऽयं हिरण्यगर्भो न विग्राह्यः। तथा चोक्तम्—

सत्यार्यौ धार्मिकोऽनार्यो भ्रातृसंघातवान् बली।
अनेकयुद्धविजयी संधेयाः सप्त कीर्तिताः॥ २२॥
सत्योऽनुपालयन् सत्यं संधितो नैति विक्रियाम्।
प्राणबाधेऽपि सुव्यक्तमार्यो नायात्यनार्यताम्॥ २३॥
धार्मिकस्याभियुक्तस्य सर्व एव हि युध्यते।
प्रजानुरागाद्धर्माच्च दुःखोच्छेद्यो हि धार्मिकः॥ २४॥
संधिः कार्योऽप्यनार्येण विनाशे समुपस्थिते।
विना तस्याश्रयेणार्यो न कुर्यात् कालयापनम्॥ २५॥
संहतत्वाद्यथा वेणुर्निबिडैः कण्टकैर्वृतः।
न शक्यते समुच्छेत्तुं भ्रातृसंघातवांस्तथा॥ २६॥
बलिना सह योद्धव्यमिति नास्ति निदर्शनम्।
प्रतिवातं नहि घनः कदाचिदुपसर्पति॥ २७॥
जमदग्नेः सुतस्येव सर्वः सर्वत्र सर्वदा।
अनेकयुद्धजयिनः प्रतापादेव भुज्यते॥ २८॥
अनेकयुद्धविजयी संधानं यस्य गच्छति।
तत्प्रतापेन तस्याशु वशमायान्ति शत्रवः॥ २९॥

तत्र तावद्बहुभिर्गुणैरुपेतः संधेयोऽयं राजहंसः'। चक्रवाकोऽवदत्— 'प्रणिधे! सर्वमवगतम्। गत्वा पुनरागमिष्यसि'। राजा चक्रवाकं पृष्टवान्— 'मन्त्रिन्! असंधेयाः कति? ताञ्छ्रोतुमिच्छामि'। मन्त्री ब्रूते— 'देव! कथयामि। शृणु,—

बालो वृद्धो दीर्घरोगी तथा ज्ञातिबहिष्कृतः ।
भीरुको भीरुजनको लुब्धो लुब्धजनस्तथा ॥ ३० ॥
विरक्तप्रकृतिश्चैव विषयेष्वतिसक्तिमान् ।
अनेकचित्तमन्त्रस्तु देवब्राह्मणनिन्दकः ॥ ३१ ॥
दैवोपहतकश्चैव तथा दैवपरायणः ।
दुर्भिक्षव्यसनोपेतो बलव्यसनसंकुलः ॥ ३२ ॥
अदेशस्थो बहुरिपुर्युक्तः कालेन यश्च न ।
सत्यधर्मव्यपेतश्च विंशतिः पुरुषा अमी ॥ ३३ ॥
एतैः संधिं न कुर्वीत विगृह्णीयात्तु केवलम् ।
एते विगृह्यमाणा हि क्षिप्रं यान्ति रिपोर्वशम् ॥ ३४ ॥
बालस्याल्पप्रभावत्वान्न लोको योद्धुमिच्छति ।
युद्धायुद्धफलं यस्माज्ज्ञातुं शक्तो न बालिशः ॥ ३५ ॥
उत्साहशक्तिहीनत्वाद्वृद्धो दीर्घामयस्तथा ।
स्वैरेव परिभूयेते द्वावप्येतावसंशयम् ॥ ३६ ॥
सुखोच्छेद्यो हि भवति सर्वज्ञातिबहिष्कृतः ।
त एवैनं विनिघ्नन्ति ज्ञातयस्त्वात्मसात्कृताः ॥ ३७ ॥
भीरुर्युद्धपरित्यागात्स्वयमेव प्रणश्यति ।
तथैव भीरुपुरुषः सङ्ग्रामे तैर्विमुच्यते ॥ ३८ ॥
लुब्धस्यासंविभागित्वान्न युध्यन्तेऽनुयायिनः ।
लुब्धानुजीविभिरेष दानहीनैर्निहन्यते ॥ ३९ ॥
संत्यज्यते प्रकृतिभिर्विरक्तप्रकृतिर्युधि ।
सुखाभियोज्यो भवति विषयेष्वतिसक्तिमान् ॥ ४० ॥
अनेकचित्तमन्त्रस्तु भेद्यो भवति मन्त्रिणा । (मात्म्)
अनवस्थितचित्तत्वात् कार्ये तैः स उपेक्ष्यते ॥ ४१ ॥
सदाऽधर्मबलीयस्त्वाद्देवब्राह्मणनिन्दकः ।
विशीर्यते स्वयं ह्येष दैवोपहतकस्तथा ॥ ४२ ॥

पाठा०- १ दैवाचन्तक एव च. २ द्वेष्यः.

संपत्तेश्च विपत्तेश्च दैवमेव हि कारणम् ।
इति दैवपरो ध्यायन् नात्मानमपि चेष्टते ॥ ४३ ॥
दुर्भिक्षव्यसनी चैव स्वयमेवावसीदति[1] ।
बलव्यसनयुक्तस्य योद्धुं शक्तिर्न जायते ॥ ४४ ॥
अदेशस्थो हि रिपुणा स्वल्पकेनापि हन्यते ।
ग्राहोऽल्पीयानपि जले गजेन्द्रमपि कर्षति ॥ ४५ ॥
बहुशत्रुस्तु संत्रस्तः श्येनमध्ये कपोतवत् ।
येनैव गच्छति पथा तेनवाशु[2] विपद्यते ॥ ४६ ॥
अकालसैन्ययुक्तस्तु हन्यते कालयोधिना ।
कौशिकेन हतज्योतिर्निशीथ इव वायसः ॥ ४७ ॥
सत्यधर्मव्यपेतेन संदध्यान्न कदाचन ।
स संधितोऽप्यसाधुत्वादचिराद्याति विक्रियाम् ॥ ४८ ॥

अपरमपि कथयामि । संधिविग्रहयानासनसंश्रयद्वैधीभावाः षाड्गुण्यम् । कर्मणामारम्भोपायः पुरुषद्रव्यसंपद्देशकालविभागो विनिपातप्रतीकारः कार्यसिद्धिश्च पञ्चाङ्गो मन्त्रः । सामदानभेददण्डाश्चत्वार उपायाः । उत्साहशक्तिर्मन्त्रशक्तिः प्रभुशक्तिश्चेति शक्तित्रयम् । एतत्सर्वमालोच्य नित्यं विजिगीषवो भवन्ति महान्तः ।

या हि प्राणपरित्यागमूल्येनापि न लभ्यते ।
सा श्रीर्नीतिविदं[3] पश्य चञ्चलापि प्रधावति ॥ ४९ ॥

तथा चोक्तम्,–

वित्तं यदा यस्य समं विभक्तं
गूढश्चरः[4] संनिभृतश्च मन्त्रः ।
न चाप्रियं प्राणिषु यो ब्रवीति
स सागरान्तां पृथिवीं प्रशास्ति ॥ ५० ॥

किंतु यद्यपि महामन्त्रिणा गृध्रेण संधानमुपन्यस्तं तथापि तेन राज्ञा

पाठा०– १ स्वयमेव विषीदति. २ तेनैवासौ. ३ नीतिविदां वेश्म. ४ गूढश्च चारो निभृतश्च.

संप्रति भूतजयदर्पान्न मन्तव्यम् । देव ! तदेवं क्रियताम् । सिंहलद्वीपस्य महाबलो नाम सारसो राजाऽस्मन्मित्रं जम्बुद्वीपे कोपं जनयतु । यतः,—

सुगुप्तिमाधाय सुसंहतेन
बलेन वीरो विचरन्नरातिम् ।
संतापयेद्येन समं सुतप्त-
स्तप्तेन संधानमुपैति तप्तः' ॥ ५१ ॥

राज्ञा 'एवमस्तु' इति निगद्य विचित्रनामा वकः सुगुप्तलेखं दत्त्वा सिंहलद्वीपं प्रहितः ।

अथ प्रणिधिः पुनरागत्योवाच— 'देव ! श्रूयतां तत्रत्यप्रस्तावः । एवं तत्र गृध्रेणोक्तम्— 'देव ! यन्मेघवर्णस्तत्र चिरमुषितः । स वेत्ति किं संधेयगुणयुक्तो हिरण्यगर्भो न वा ' इति । ततोऽसौ राज्ञा समाहूय पृष्टः— 'वायस ! कीदृशोऽसौ हिरण्यगर्भः ? । चक्रवाकी मन्त्री वा कीदृशः ?' । वायस उवाच— 'देव ! हिरण्यगर्भो राजा युधिष्ठिरसमो महाशयः सत्यवाक्; चक्रवाकसमो मन्त्री न क्वाप्यवलोक्यते' । राजाह— 'यद्येवं तदा कथमसौ त्वया वञ्चितः ? ।' विहस्य मेघवर्णः प्राह— 'देव !

विश्वासप्रतिपन्नानां वञ्चने का विदग्धता ? ।
अङ्कमारुह्य सुप्तं हि हत्वा किं नाम पौरुषम् ? ॥ ५२ ॥

शृणु देव ! तेन मन्त्रिणाहं प्रथमदर्शन एव ज्ञातः । किंतु महाशयोऽसौ राजा । तेन मया विप्रलब्धः । तथा चोक्तम्,—

आत्मौपम्येन यो वेत्ति दुर्जनं सत्यवादिनम् ।
स तथा वञ्च्यते धूर्तैर्ब्राह्मणश्छागतो यथा' ॥ ५३ ॥

राजोवाच— 'कथमेतत् ?' । मेघवर्णः कथयति,—

## [ शठस्य सत्यवक्तृत्वे ब्राह्मण-च्छाग-धूर्तत्रयकथा ९ ]

"अस्ति गौतमस्यारण्ये प्रस्तुतयज्ञः कश्चिद्ब्राह्मणः । स च यज्ञार्थं ग्रामान्तराच्छागमुपक्रीय स्कन्धे कृत्वा गच्छन् धूर्तत्रयेणावलोकितः ।

ततस्ते धूर्ता यद्येष च्छागः केनाप्युपायेन लभ्यते तदा मतिप्रकर्षो भवतीति समालोच्य वृक्षत्रयतले क्रोशान्तरेण तस्य ब्राह्मणस्यागमनं प्रतीक्ष्य पथि स्थिताः। तत्रैकेन धूर्तेन गच्छन् स ब्राह्मणोऽभिहितः— 'भो ब्राह्मण ! किमिति कुक्कुरः स्कन्धेनोह्यते ?'। विप्रेणोक्तम्— 'नायं श्वा; किंतु यज्ञच्छागः'। अथानन्तरस्थितेनान्येन धूर्तेन तथैवोक्तम्। तदाकर्ण्य ब्राह्मणश्छागं भूमौ निधाय मुहुर्निरीक्ष्य पुनः स्कन्धे कृत्वा दोलायमानमतिश्चलितः। यतः,—

मतिर्दोलायते सत्यं सतामपि खलोक्तिभिः।
ताभिर्विश्वासितश्चासौ म्रियते चित्रकर्णवत्' ॥ ५४ ॥

राजाह— 'कथमेतत् ?'। स कथयति,—

## [ शठोक्तिविश्वासे सिंह-काक-व्याघ्रोष्ट्रादिकथा १० ]

'अस्ति कस्मिंश्चिद्वनोद्देशे मदोत्कटो नाम सिंहः। तस्य सेवकास्त्रयः—काको व्याघ्रो जम्बुकश्च। अथ तैर्भ्रमद्भिः सार्थाद्भ्रष्टः कश्चिदुष्ट्रो दृष्टः पृष्टश्च— 'कुतो भवानागतः ?'। स चात्मवृत्तान्तमकथयत्। ततस्तैर्नीत्वा सिंहायाऽसौ समर्पितः। अथ तेनाभयवाचं दत्त्वा चित्रकर्ण इति नाम कृत्वा स्थापितः। अथ कदाचित्सिंहस्य शरीरवैकल्याद्भूरिवृष्टिकारणाच्चाहारमलभमानास्ते व्यग्रा बभूवुः। ततस्तैरालोचितम्— 'चित्रकर्णमेव यथा स्वामी व्यापादयति तथाऽनुष्ठीयताम्। किमनेन कण्टकभुजा ?'। व्याघ्र उवाच— 'स्वामिनाऽभयवाचं दत्त्वाऽनुगृहीतस्तत्कथमेवं संभवति ?'। काको ब्रूते— 'इह समये परिक्षीणः स्वामी पापमपि करिष्यति। यतः,—

त्यजेत् क्षुधार्ता महिला स्वपुत्रं,
खादेत् क्षुधार्ता भुजगी स्वमण्डम्।
बुभुक्षितः किं न करोति पापं ?
क्षीणा नरा निष्करुणा भवन्ति ॥ ५५ ॥

पाठा०—१ नूनं. २ योऽसौ. ३ महिलाऽपि पुत्रं.

अन्यच्च,–

मत्तः प्रमत्तश्चोन्मत्तः श्रान्तः क्रुद्धो[1] बुभुक्षितः।
लुब्धो भीरुस्त्वरायुक्तः कामुकश्च न धर्मवित्' ॥ ५६ ॥

इति संचिन्त्य[2] सर्वे सिंहान्तिकं जग्मुः। सिंहेनोक्तम्— 'आहारार्थं किंचित्प्राप्तम्?'। तैरुक्तम्— 'यत्नादपि न प्राप्तं किंचित्'। सिंहेनोक्तम्— 'कोऽधुना जीवनोपायः?'। काको वदति— 'देव! स्वाधीनाहारपरित्यागात् सर्वनाशोऽयमुपस्थितः'। सिंहेनोक्तम्— 'अत्राहारः कः स्वाधीनः?'। काकः सिंहकर्णे कथयति— 'चित्रकर्णः' इति। सिंहो भूमिं स्पृष्ट्वा कर्णौ स्पृशति, आह च। 'अभयवाचं दत्त्वा धृतोऽयमस्माभिः। तत्कथमेवं संभवति?। तथा च,–

न भूप्रदानं न सुवर्णदानं
न गोप्रदानं न तथान्नदानम्।
यथा वदन्तीह महाप्रदानं
सर्वेषु[3] दानेष्वभयप्रदानम् ॥ ५७ ॥

अन्यच्च,–

सर्वकामसमृद्धस्य अश्वमेधस्य यत्फलम्।
तत्फलं लभते सम्यग्रक्षिते शरणागते' ॥ ५८ ॥

काको ब्रूते— 'नासौ स्वामिना व्यापादयितव्यः। किंत्वस्माभिरेव तथा कर्तव्यं यथासौ स्वदेहदानमङ्गीकरोति'। सिंहस्तच्छ्रुत्वा तूष्णीं स्थितः। ततोऽसौ लब्धावकाशः कूटं कृत्वा सर्वानादाय सिंहान्तिकं गतः। अथ काकेनोक्तम्— 'देव! यत्नादप्याहारो न प्राप्तः। अनेकोपवासखिन्नः स्वामी। तदिदानीं मदीयमांसमुपभुज्यताम्। यतः,–

स्वामिमूला भवन्त्येव सर्वाः प्रकृतयः खलु।
समूलेष्वपि वृक्षेषु प्रयत्नः सफलो नृणाम्' ॥ ५९ ॥

सिंहेनोक्तम्— 'वरं प्राणपरित्यागः। न पुनरीदृशि कर्मणि प्रवृत्तिः'। जम्बुकेनापि तथोक्तम्। ततः सिंहेनोक्तम्— 'मैवम्'। अथ

पाठा०–१ क्रोधी. २ निश्चिन्त्य. ३ सर्वप्रदानेष्वभयप्रदानम्.

व्याघ्रेणोक्तम्— 'मद्देहेन जीवतु स्वामी'। सिंहेनोक्तम्— 'न कदाचिदेवमुचितम्'। अथ चित्रकर्णोऽपि जातविश्वासस्तथैवात्मदानमाह। ततस्तद्वचनात्तेन व्याघ्रेणासौ कुक्षिं विदार्य व्यापादितः सर्वैर्भक्षितश्च। अतोऽहं ब्रवीमि— "मतिर्दोलायते सत्यम्" इत्यादि॥ ततस्तृतीयधूर्तवचनं श्रुत्वा स्वमतिभ्रमं निश्चित्य छागं त्यक्त्वा ब्राह्मणः स्नात्वा गृहं ययौ। स छागस्तैर्धूर्तैर्नीत्वा भक्षितः। अतोऽहं ब्रवीमि— "आत्मौपम्येन यो वेत्ति" इत्यादि'॥ राजाह— 'मेघवर्ण! कथं शत्रुमध्ये त्वया चिरमुषितम्? कथं वा तेषामनुनयः कृतः?'। मेघवर्ण उवाच— 'देव! स्वामिकार्यार्थिना स्वप्रयोजनवशाद्वा किं न क्रियते?। पश्य,—

लोको वहति किं राजन्! न मूर्ध्ना दग्धुमिन्धनम्?।
क्षालयन्नपि वृक्षाङ्घ्रिं नदीवेगो निकृन्तति॥ ६०॥

तथा चोक्तम्,—

स्कन्धेनापि वहेच्छत्रून् कार्यमासाद्य बुद्धिमान्।
यथा वृद्धेन सर्पेण मण्डूका विनिपातिताः॥ ६१॥

राजाह— 'कथमेतत्?'। मेघवर्णः कथयति,—

## [ कार्यनिष्पत्तौ शत्रुवलंबे सर्प-मण्डूककथा ११ ]

"अस्ति कस्मिंश्चिज्जीर्णोद्याने मन्दविषो नाम सर्पः। सोऽतिजीर्णतयाहारमप्यन्वेष्टुमक्षमः सरस्तीरे पतित्वा स्थितः। ततो दूरादेव केनचिन्मण्डूकेन दृष्टः पृष्टश्च— 'किमिति त्वमाहारं नान्विष्यसि?'। सर्पोऽवदत्— 'गच्छ भद्र! मम मन्दभाग्यस्य वृत्तान्तप्रश्नेन किम्?'। ततः संजातकौतुकः स च भेकः 'सर्वथा कथ्यताम्' इत्याह। सर्पोऽप्याह— 'भद्र! ब्रह्मपुरवासिनः श्रोत्रियस्य कौण्डिन्यस्य पुत्रो विंशतिवर्षीयः सर्वगुणसंपन्नो दुर्दैवान्मम नृशंसस्वभावाद्दष्टः। सुशीलनामानं तं पुत्रं मृतमालोक्य शोकेन मूर्च्छितः कौण्डिन्यः पृथिव्यां

अन्यच्च,-

मत्तः प्रमत्तश्चोन्मत्तः श्रान्तः क्रुद्धो[1] बुभुक्षितः ।
लुब्धो भीरुस्त्वरायुक्तः कामुकश्च न धर्मवित्' ॥ ५६ ॥

इति संचिन्त्य[2] सर्वे सिंहान्तिकं जग्मुः । सिंहेनोक्तम्— 'आहारार्थं किंचित्प्राप्तम्?' । तैरुक्तम्— 'यत्नादपि न प्राप्तं किंचित्' । सिंहेनोक्तम्— 'कोऽधुना जीवनोपायः ?' । काको वदति— 'देव ! स्वाधीनाहारपरित्यागात् सर्वनाशोऽयमुपस्थितः' । सिंहेनोक्तम्— 'अत्राहारः कः स्वाधीनः ?' । काकः सिंहकर्णे कथयति— 'चित्रकर्णः' इति । सिंहो भूमिं स्पृष्ट्वा कर्णौ स्पृशति, आह च । 'अभयवाचं दत्त्वा धृतोऽयमस्माभिः । तत्कथमेवं संभवति ? । तथा च,-

न भूप्रदानं न सुवर्णदानं
न गोप्रदानं न तथान्नदानम् ।
यथा वदन्तीह महाप्रदानं
[3]सर्वेषु दानेष्वभयप्रदानम् ॥ ५७ ॥

अन्यच्च,-

सर्वकामसमृद्धस्य अश्वमेधस्य यत्फलम् ।
तत्फलं लभते सम्यग्रक्षिते शरणागते' ॥ ५८ ॥

काको ब्रूते— 'नासौ स्वामिना व्यापादयितव्यः । किंत्वस्माभिरेव तथा कर्तव्यं यथासौ स्वदेहदानमङ्गीकरोति' । सिंहस्तच्छ्रुत्वा तूष्णीं स्थितः । ततोऽसौ लब्धावकाशः कूटं कृत्वा सर्वानादाय सिंहान्तिकं गतः । अथ काकेनोक्तम्— 'देव ! यत्नादप्याहारो न प्राप्तः । अनेकोपवासखिन्नः स्वामी । तदिदानीं मदीयमांसमुपभुज्यताम् । यतः,-

स्वामिमूला भवन्त्येव सर्वाः प्रकृतयः खलु ।
समूलेष्वपि वृक्षेषु प्रयत्नः सफलो नृणाम्' ॥ ५९ ॥

सिंहेनोक्तम्— 'वरं प्राणपरित्यागः । न पुनरीदृशि कर्मणि प्रवृत्तिः' । जम्बुकेनापि तथोक्तम् । ततः सिंहेनोक्तम्— 'मैवम्' । अथ

पाठा०—१ क्रोधी. २ निश्चित्य. ३ सर्वप्रदानेष्वभयप्रदानम्.

व्याघ्रेणोक्तम्— 'मद्देहेन जीवतु स्वामी'। सिंहेनोक्तम्— 'न कदाचिदेवमुचितम्'। अथ चित्रकर्णोऽपि जातविश्वासस्तथैवात्मदानमाह। ततस्तद्वचनात्तेन व्याघ्रेणासौ कुक्षिं विदार्य व्यापादितः सर्वैर्भक्षितश्च। अतोऽहं ब्रवीमि— "मतिर्दोलायते सत्यम्" इत्यादि॥ ततस्तृतीयधूर्तवचनं श्रुत्वा स्वमतिभ्रमं निश्चित्य छागं त्यक्त्वा ब्राह्मणः स्नात्वा गृहं ययौ। स छागस्तैर्धूर्तैर्नीत्वा भक्षितः। अतोऽहं ब्रवीमि— "आत्मौपम्येन यो वेत्ति" इत्यादि'॥ राजाह— 'मेघवर्ण! कथं शत्रुमध्ये त्वया चिरमुषितम्? कथं वा तेषामनुनयः कृतः?'। मेघवर्ण उवाच— 'देव! स्वामिकार्यार्थिना स्वप्रयोजनवशाद्वा किं न क्रियते?। पश्य,—

लोको वहति किं राजन्! न मूर्ध्ना दग्धुमिन्धनम्?।
क्षालयन्नपि वृक्षाङ्घ्रिं नदीवेगो निकृन्तति॥ ६०॥

तथा चोक्तम्,—

स्कन्धेनापि वहेच्छत्रून् कार्यमासाद्य बुद्धिमान्।
यथा वृद्धेन सर्पेण मण्डूका विनिपातिताः॥ ६१॥

राजाह— 'कथमेतत्?'। मेघवर्णः कथयति,—

## [ कार्यनिष्पत्तौ शत्रववलंबे सर्प-मण्डूककथा ११ ]

"अस्ति कस्मिंश्चिज्जीर्णोद्याने मन्दविषो नाम सर्पः। सोऽतिजीर्णतयाहारमप्यन्वेष्टुमक्षमः सरस्तीरे पतित्वा स्थितः। ततो दूरादेव केनचिन्मण्डूकेन दृष्टः पृष्टश्च— 'किमिति त्वमाहारं नान्विष्यसि?'। सर्पोऽवदत्— 'गच्छ भद्र! मम मन्दभाग्यस्य वृत्तान्तप्रश्नेन किम्?'। ततः संजातकौतुकः स च भेकः 'सर्वथा कथ्यताम्' इत्याह। सर्पोऽप्याह— 'भद्र! ब्रह्मपुरवासिनः श्रोत्रियस्य कौण्डिन्यस्य पुत्रो विंशतिवर्षीयः सर्वगुणसंपन्नो दुर्दैवान्मम नृशंसस्वभावाद्दष्टः। सुशीलनामानं तं पुत्रं मृतमालोक्य शोकेन मूर्च्छितः कौण्डिन्यः पृथिव्यां

लुलोठ । अनन्तरं ब्रह्मपुरवासिनः सर्वे बान्धवास्तत्रागत्योपविष्टाः । तथा चोक्तम्,—

उत्सवे व्यसने युद्धे दुर्भिक्षे राष्ट्रविप्लवे ।
राजद्वारे श्मशाने च यस्तिष्ठति स बान्धवः' ॥ ६२ ॥

तत्र कपिलो नाम स्नातकोऽवदत्— 'अरे कौण्डिन्य ! मूढोऽसि तेनैवं विलपसि । शृणु,—

क्रोडीकरोति प्रथमं यथा जातमनित्यता ।
धात्रीव जननी पश्चात्तथा शोकस्य कः क्रमः ? ॥ ६३ ॥
क्व गताः पृथिवीपालाः ससैन्यबलवाहनाः ? ।
वियोगसाक्षिणी येषां भूमिरद्यापि तिष्ठति ॥ ६४ ॥

अपरं च,—

कायः संनिहितापायः संपदः पदमापदाम् ।
समागमाः सापगमाः सर्वमुत्पादि भङ्गुरम् ॥ ६५ ॥
प्रतिक्षणमयं कायः क्षीयमाणो न लक्ष्यते ।
आमकुम्भ इवाम्भःस्थो विशीर्णः सन्विभाव्यते ॥ ६६ ॥
आसन्नतरतामेति मृत्युर्जन्तोर्दिने दिने ।
आघातं नीयमानस्य वध्यस्येव पदे पदे ॥ ६७ ॥
अनित्यं यौवनं रूपं जीवितं द्रव्यसंचयः ।
ऐश्वर्यं प्रियसंवासो मुह्येत्तत्र न पण्डितः ॥ ६८ ॥
यथा काष्ठं च काष्ठं च समेयातां महोदधौ ।
समेत्य च व्यपेयातां तद्वद्भूतसमागमः ॥ ६९ ॥
यथा हि पथिकः कश्चिच्छायामाश्रित्य तिष्ठति ।
विश्रम्य च पुनर्गच्छेत्तद्वद्भूतसमागमः ॥ ७० ॥

अन्यच्च,—

पञ्चभिर्निर्मिते देहे पञ्चत्वं च पुनर्गते ।
स्वां स्वां योनिमनुप्राप्ते तत्र का परिदेवना ? ॥ ७१ ॥

---

पाठा०- 1 विग्रहे.

यावतः

यावन्तः कुरुते जन्तुः संबन्धान्मनसः प्रियान् ।
तावन्तोऽपि निखन्यन्ते हृदये शोकशङ्कवः ॥ ७२ ॥
नायमत्यन्तसंवासो लभ्यते येन केनचित् ।
अपि स्वेन शरीरेण किमुतान्येन केनचित् ॥ ७३ ॥

अपि च,–

संयोगो हि वियोगस्य संसूचयति संभवम् ।
अनतिक्रमणीयस्य जन्म मृत्योरिवागमम् ॥ ७४ ॥
आपातरमणीयानां संयोगानां प्रियैः सह ।
अपथ्यानामिवान्नानां परिणामोऽतिदारुणः[1] ॥ ७५ ॥

अपरं च,–

व्रजन्ति न निवर्तन्ते स्रोतांसि सरितां यथा ।
आयुरादाय मर्त्यानां तथा रात्र्यहनी सदा ॥ ७६ ॥
सुखास्वादपरो यस्तु संसारे सत्समागमः ।
स वियोगावसानत्वाद्दुःखानां धुरि युज्यते ॥ ७७ ॥
अत एव हि नेच्छन्ति साधवः सत्समागमम् ।
यद्वियोगासिलूनस्य मनसो नास्ति भेषजम् ॥ ७८ ॥
सुकृतान्यपि कर्माणि राजभिः सगरादिभिः ।
अथ तान्येव कर्माणि ते चापि प्रलयं गताः ॥ ७९ ॥

संचिन्त्य संचिन्त्य तमुग्रदण्डं
मृत्युं मनुष्यस्य विचक्षणस्य ।
वर्षाम्बुसिक्ता इव चर्मबन्धाः
सर्वे प्रयत्नाः शिथिलीभवन्ति ॥ ८० ॥

यामेव रात्रिं प्रथमामुपैति
गर्भे निवासं नरवीरलोकः ।
ततःप्रभृत्यस्खलितप्रयाणः
स प्रत्यहं मृत्युसमीपमेति ॥ ८१ ॥

पाठा०–१ परिणामो हि दारुणः.

अतः संसारं विचारय । शोकोऽयमज्ञानस्य प्रपञ्चः । पश्य,–

अज्ञानं कारणं न स्याद्वियोगो यदि कारणम् ।
शोको दिनेषु गच्छत्सु वर्धतामपयाति किम् ? ॥ ८२ ॥

तद्भद्रात्मानमनुसंधेहि । शोकचर्चां परिहर । यतः,–

अकाण्डपातजातानां[1]मस्त्राणां मर्मभेदिनाम् ।
गाढशोकप्रहाराणामचिन्तैव महौषधम्' ॥ ८३ ॥

ततस्तद्वचनं निशम्य प्रबुद्ध इव कौण्डिन्य उत्थायाब्रवीत्— 'तदलमिदानीं गृहनरकवासेन । वनमेव गच्छामि' । कपिलः पुनराह—

'वनेऽपि दोषाः प्रभवन्ति रागिणां
गृहेऽपि पञ्चेन्द्रियनिग्रहस्तपः ।
अकुत्सिते कर्मणि यः प्रवर्तते
निवृत्तरागस्य गृहं तपोवनम् ॥ ८४ ॥

यतः,–

दुःखितोऽपि चरेद्धर्मं यत्र कुत्राश्रमे रतः ।
समः सर्वेषु भूतेषु न लिङ्गं धर्मकारणम् ॥ ८५ ॥

उक्तं च,–

वृत्त्यर्थं भोजनं येषां संतानार्थं च मैथुनम् ।
वाक्सत्यवचनार्थं[2] च दुर्गाण्यपि तरन्ति ते ॥ ८६ ॥

तथा हि,–

आत्मा नदी संयमपुण्यतीर्था
सत्योदका शीलतटा दयोर्मिः ।
तत्राभिषेकं कुरु पाण्डुपुत्र !
न वारिणा शुध्यति चान्तरात्मा ॥ ८७ ॥

विशेषतश्च,–

जन्ममृत्युजराव्याधिवेदनाभिरुपद्रुतम्[3] ।
संसारमिमं[4]मुत्पन्नमसारं त्यजतः सुखम् ॥ ८८ ॥

पाठा०– १ जातानां पात्राणां. २ वचनार्थाय. ३ अभिप्लुतम्. ४ इदमत्यन्तं.

यतः,–

दुःखमेवास्ति न सुखं यस्मात्तदुपलक्ष्यते ।
दुःखार्तस्य प्रतीकारे सुखसंज्ञा विधीयते' ॥ ८९ ॥

कौण्डिन्यो ब्रूते– 'एवमेव'। ततोऽहं तेन शोकाकुलेन ब्राह्मणेन शप्तः– "यदद्यारभ्य मण्डूकानां वाहनं भविष्यसि" इति' । कपिलो ब्रूते– 'संप्रत्युपदेशासहिष्णुर्भवान्, शोकाविष्टं ते हृदयम्। तथापि कार्यं शृणु,-

सङ्गः सर्वात्मना त्याज्यः स चेत्त्यक्तुं न शक्यते ।
स सद्भिः सह कर्तव्यः सतां सङ्गो हि भेषजम् ॥ ९० ॥

अन्यच्च,–

कामः सर्वात्मना हेयः स चेद्धातुं न शक्यते ।
स्वभार्यां प्रति कर्तव्यः सैव तस्य हि भेषजम्' ॥ ९१ ॥

एतच्छ्रुत्वा स कौण्डिन्यः कपिलोपदेशामृतप्रशान्तशोकानलो यथाविधि दण्डग्रहणं कृतवान् । ततो ब्राह्मणशापान्मण्डूकान् वोढुमत्र तिष्ठामि । अनन्तरं तेन मण्डूकेन गत्वा मण्डूकनाथस्य जालपादनाम्नोऽग्रे तत्कथितम् । ततोऽसावागत्य मण्डूकनाथस्तस्य सर्पस्य पृष्ठमारूढवान् । स च सर्पस्तं पृष्ठे कृत्वा चित्रपदक्रमं बभ्राम । परेद्युश्चलितुमसमर्थं तं मण्डूकनाथोऽवदत्– 'किमद्य भवान्मन्दगतिः ?' । सर्पो ब्रूते– 'देव ! आहारविरहादसमर्थोऽस्मि' । मण्डूकनाथोऽवदत्– 'अस्मदाज्ञया मण्डूकान् भक्षय'। ततः 'गृहीतोऽयं महाप्रसादः' इत्युक्त्वा स क्रमशो मण्डूकान् खादितवान् । अतो निर्मण्डूकं सरो विलोक्य मण्डूकनाथोऽपि तेन खादितः । अतोऽहं ब्रवीमि– "स्कन्धेनापि वहेच्छत्रून्" इत्यादि ॥ देव ! यात्विदानीं पुरावृत्ताख्यानकथनम् । सर्वथा संधेयोऽयं हिरण्यगर्भो राजा संधीयतामिति मे मतिः' । राजोवाच– 'कोऽयं भवतो विचारः ? यतो जितस्तावदयमस्माभिस्ततो यद्यस्मत्सेवया वसति तदास्ताम् । नो चेद्विगृह्यताम्' । अत्रान्तरे जम्बूद्वीपादागत्य शुकेनोक्तम्– 'देव ! सिंहलद्वीपस्य सारसो

राजा संप्रति जम्बूद्वीपमाक्रम्यावतिष्ठते । राजा ससंभ्रमं ब्रूते—'किं किम्?'। शुकः पूर्वोक्तं कथयति। गृध्रः स्वगतमुवाच—'साधु रे चक्रवाक मन्त्रिन् सर्वज्ञ! साधु साधु' । राजा सकोपमाह—'आस्तां तावदयम्। गत्वा तमेव समूलमुन्मूलयामि' । दूरदर्शी विहस्याह—

'न शरन्मेघवत् कार्यं वृथैव घनगर्जितम् ।
परस्यार्थमनर्थं वा प्रकाशयति नो महान् ॥ ९२ ॥

अपरं च,—

एकदा न विगृह्णीयाद्बहून् राजाभिघातिनः ।
सदर्पोऽप्युरगः कीटैर्बहुभिर्नाश्यते ध्रुवम् ॥ ९३ ॥

देव! किमिति विना संधानं गमनमस्ति? यतस्तदास्मत्पश्चात्प्रकोपोऽनेन कर्तव्यः । अपरं च,—

योऽर्थतत्त्वमविज्ञाय क्रोधस्यैव वशं गतः ।
स तथा तप्यते मूढो ब्राह्मणो नकुलाद्यथा' ॥ ९४ ॥

राजाह—'कथमेतत्?'। दूरदर्शी कथयति,—

## [ सहसा कार्यकारणे ब्राह्मण-नकुल-सर्पकथा १२ ]

अस्त्युज्जयिन्यां माधवो नाम ब्राह्मणः। तस्य ब्राह्मणी प्रसूता बालापत्यस्य रक्षार्थं ब्राह्मणमवस्थाप्य स्नातुं गता। अथ ब्राह्मणाय राज्ञः पार्वणश्राद्धं दातुमाह्वानमागतम् । तच्छ्रुत्वा ब्राह्मणः सहजदारिद्र्यादचिन्तयत्—'यदि सत्वरं न गच्छामि तदाऽन्यः कश्चिच्छ्रुत्वा श्राद्धं ग्रहीष्यति । यतः,—

आदानस्य प्रदानस्य कर्तव्यस्य च कर्मणः ।
क्षिप्रमक्रियमाणस्य कालः पिबति तद्रसम् ॥ ९५ ॥

किंतु बालकस्यात्र रक्षको नास्ति। तत्किं करोमि? यातु; चिरकालपालितमिमं नकुलं सुतनिर्विशेषं बालकरक्षायां व्यवस्थाप्य

पाठा०—१ राजा विरोधिनः. २ नाशितः. ३ आदेयस्य प्रदेयस्य.

गच्छामि' । तथा कृत्वा गतः । ततस्तेन नकुलेन बालकसमीपमागच्छन् कृष्णसर्पो दृष्ट्वा व्यापाद्य कोपात्खण्डं खण्डं कृत्वा व्यापादितः । ततोऽसौ नकुलो ब्राह्मणमायान्तमवलोक्य रक्तविलिप्तमुखपादः सत्वरमुपागम्य तच्चरणयोर्लुलोठ । ततः स विप्रस्तथाविधं तं दृष्ट्वा 'बालकोऽनेन खादितः' इत्यवधार्य नकुलं व्यापादितवान् । अनन्तरं यावदुपसृत्यापत्यं पश्यति ब्राह्मणस्तावद्बालकः सुस्थः सर्पश्च व्यापादितस्तिष्ठति । ततस्तमुपकारकं नकुलं निरीक्ष्य भावितचेताः स परं विषादमगमत्' । अतोऽहं ब्रवीमि—"योऽर्थतत्त्वमविज्ञाय" इत्यादि ॥

अपरं च,—

कामः क्रोधस्तथा मोहो लोभो मानो मदस्तथा ।
षड्वर्गमुत्सृजेदेनमस्मिंस्त्यक्ते सुखी नृपः' ॥ ९६ ॥

राजाह—'मन्त्रिन्! एष ते निश्चयः ?' । मन्त्री ब्रूते—'एवमेव । यतः,—

स्मृतिश्च परमार्थेषु वितर्को ज्ञाननिश्चयः ।
दृढता मन्त्रगुप्तिश्च मन्त्रिणः परमो गुणः ॥ ९७ ॥

तथा च,—

सहसा विदधीत न क्रिया-
मविवेकः परमापदां पदम् ।
वृणते हि विमृश्यकारिणं
गुणलुब्धाः स्वयमेव संपदः ॥ ९८ ॥

तद्देव ! यदिदानीमस्मद्वचनं क्रियते तदा संधाय गम्यताम् । यतः,—

यद्यप्युपायाश्चत्वारो निर्दिष्टाः साध्यसाधने ।
संख्यामात्रं फलं तेषां सिद्धिः साम्नि व्यवस्थिता' ॥ ९९ ॥

राजाह—'कथमेतत्सत्वरं संभवति ?' । मन्त्री ब्रूते—'देव ! सत्वरं भविष्यति ।

यतः,—

अज्ञः सुखमाराध्यः सुखतरमाराध्यते विशेषज्ञः ।
ज्ञानलवदुर्विदग्धं ब्रह्मापि नरं न रञ्जयति ॥ १०० ॥

विशेषतश्चायं धर्मज्ञो राजा सर्वज्ञो मन्त्री च। ज्ञातमेतन्मया पूर्वं मेघवर्णवचनात्तत्कृतकार्यसंदर्शनाच्च। यतः,—

कर्मानुमेयाः सर्वत्र परोक्षगुणवृत्तयः।
तस्मात् परोक्षवृत्तीनां फलैः कर्मानुभाव्यते' ॥ १०१ ॥

राजाह—'अलमुत्तरोत्तरेण। यथाभिप्रेतमनुष्ठीयताम्'। एतन्मन्त्रयित्वा गृध्रो महामन्त्री तत्र यथार्हं कर्तव्यम्' इत्युक्त्वा दुर्गाभ्यन्तरं चलितः। ततः प्रणिधिवकेनागत्य राज्ञो हिरण्यगर्भस्य निवेदितम्—'देव! संधिं कर्तुं महामन्त्री गृध्रोऽस्मत्समीपमागच्छत्'। राजहंसो ब्रूते—'मन्त्रिन्! पुनः संवन्धिना केनचिदत्रागन्तव्यम्'। सर्वज्ञो विहस्याह—'देव! न शङ्कास्पदमेतत्। यतोऽसौ महाशयो दूरदर्शी। अथवा स्थितिरियं मन्दमतीनाम्। कदाचिच्छत्रौ शङ्कैव न क्रियते। कदाचित्सर्वत्र शङ्का। तथा हि,—

सरसि वहुशस्ताराच्छाये क्षणात्परिवञ्चितः
कुमुदविटपान्वेषी हंसो निशासु विचक्षणः।
न दशति पुनस्ताराशङ्की दिवापि सितोत्पलं
कुहकचकितो लोकः सत्येऽप्यपायमपेक्षते ॥ १०२ ॥
दुर्जनदूषितमनसः सुजनेष्वपि नास्ति विश्वासः।
वालः पायसदग्धो दध्यपि[1] फूत्कृत्य भक्षयति ॥ १०३ ॥

तद्देव! यथाशक्ति तत्पूजार्थं रत्नोपहारादिसामग्री सुसज्जीक्रियताम्'। तथानुष्ठिते सति स गृध्रो मन्त्री दुर्गद्वाराच्चक्रवाकेणोपगम्य सत्कृत्यानीय राजदर्शनं कारितो दत्तासने चोपविष्टः। चक्रवाक उवाच—'महामन्त्रिन्! युष्मदायत्तं सर्वम्। स्वेच्छयोपभुज्यतामिदं राज्यम्'। राजहंसो ब्रूते—'एवमेव'। दूरदर्शी कथयति—'एवमेवैतत्। किंत्विदानीं वहुप्रपञ्चवचनं निष्प्रयोजनम्। यतः,—

लुब्धमर्थेन गृह्णीयात् स्तब्धमञ्जलिकर्मणा।
मूर्खं छन्दानुरोधेन[2] याथातथ्येन पण्डितम् ॥ १०४ ॥

पाठा०—१ दध्यपि ननु फूत्कृतं भुङ्क्ते. २ छन्दोनुवृत्तेन.

अन्यच्च,–

सद्भावेन हरेन्मित्रं संभ्रमेण तु बान्धवान् ।
स्त्री-भृत्यौ दानमानाभ्यां दाक्षिण्येनेतरं जनम् ॥ १०५ ॥

तदिदानीं संधाय गम्यताम् । महाप्रतापश्चित्रवर्णो राजा' । चक्रवाको ब्रूते–' यथा संधानं कार्यं तदप्युच्यताम्' । राजहंसो ब्रूते–' कति प्रकाराः संधीनां संभवन्ति ?' । गृध्रो ब्रूते–' कथयामि, श्रूयताम् ;–

बलीयसाभियुक्तस्तु नृपोऽनन्यप्रतिक्रियः ।
आपन्नः संधिमन्विच्छेत् कुर्वाणः कालयापनम् ॥ १०६ ॥

कपाल उपहारश्च संतानः संगतस्तथा ।
उपन्यासः प्रतीकारः संयोगः पुरुषान्तरः ॥ १०७ ॥

अदृष्टनर आदिष्ट आत्मादिष्ट उपग्रहः ।
परिक्रयस्तथोच्छिन्नस्तथा च परभूषणः ॥ १०८ ॥

स्कन्धोपनेयः संधिश्च षोडशैते प्रकीर्तिताः ।
इति षोडशकं प्राहुः संधिं संधिविचक्षणाः ॥ १०९ ॥

कपालसंधिर्विज्ञेयः केवलं समसंधितः ।
संप्रदानाद्भवति य उपहारः स उच्यते ॥ ११० ॥

संतानसंधिर्विज्ञेयो दारिकादानपूर्वकः ।
सद्भिस्तु संगतः संधिर्मैत्रीपूर्व उदाहृतः ॥ १११ ॥

यावदायुःप्रमाणस्तु समानार्थप्रयोजनः ।
संपत्तौ वा विपत्तौ वा कारणैर्यो न भिद्यते ॥ ११२ ॥

संगतः संधिरेवायं प्रकृष्टत्वात् सुवर्णवत् ।
तथान्यैः संधिकुशलैः काञ्चनः स उदाहृतः ॥ ११३ ॥

आत्मकार्यस्य[1] सिद्धिं तु समुद्दिश्य क्रियेत यः ।
स उपन्यासकुशलैरुपन्यास उदाहृतः ॥ ११४ ॥

---

पाठा०- १ द्रव्यात्मकार्यसिद्धिं.

मयास्योपकृतं पूर्वं ममाप्येष करिष्यति ।
इति यः क्रियते संधिः प्रतीकारः स उच्यते ॥ ११५ ॥
उपकारं करोम्यस्य ममाप्येष करिष्यति ।
अयं चापि प्रतीकारो रामसुग्रीवयोरिव ॥ ११६ ॥
एकार्थां सम्यगुद्दिश्य क्रियां यत्र हि गच्छति ।
सुसंहितप्रमाणस्तु स च संयोग उच्यते ॥ ११७ ॥
आवयोर्योधमुख्यैस्तु मदर्थः साध्यतामिति ।
यस्मिन् पणस्तु क्रियते स संधिः पुरुषान्तरः ॥ ११८ ॥
त्वयैकेन मदीयोऽर्थः संप्रसाध्यस्त्वसाविति ।
यत्र शत्रुः पणं कुर्यात् सोऽदृष्टपुरुषः स्मृतः ॥ ११९ ॥
यत्र भूम्येकदेशेन पणेन रिपुरूर्जितः[1] ।
संधीयते संधिविद्भिः स चादिष्ट उदाहृतः ॥ १२० ॥
स्वसैन्येन तु संधानमात्मादिष्ट उदाहृतः ।
क्रियते प्राणरक्षार्थं सर्वदानादुपग्रहः ॥ १२१ ॥
कोशांशेनार्धकोशेन सर्वकोशेन वा पुनः ।
शिष्टस्य प्रतिरक्षार्थं परिक्रय उदाहृतः ॥ १२२ ॥
भुवां सारवतीनां तु दानादुच्छिन्न उच्यते ।
भूम्युत्थफलदानेन सर्वेण परभूषणः ॥ १२३ ॥
परिच्छिन्नं फलं यत्र प्रतिस्कन्धेन दीयते ।
स्कन्धोपनेयं तं प्राहुः संधिं संधिविचक्षणाः ॥ १२४ ॥
परस्परोपकारस्तु मैत्री संबन्धकस्तथा ।
उपहारश्च विज्ञेयाश्चत्वारश्चैव संधयः ॥ १२५ ॥
एक एवोपहारश्च संधिरेव मतो मम ।
उपहारविभिन्नास्तु सर्वे मैत्रविवर्जिताः ॥ १२६ ॥

---

पाठा०— १ रिपुवर्जितः.

अभियोक्ता बलीयस्त्वादलब्ध्वा न निवर्तते ।
उपहाराद्दते तस्मात् संधिरन्यो न विद्यते' ॥ १२७ ॥

राजाह–'भवन्तो महापण्डिताः । तदत्रास्माकं यथाकार्यमुपदिश्यताम्' । मन्त्री ब्रूते–'आः ! किमेवमुच्यते ? ।

अधिव्याधिपरीताय अद्य श्वो वा विनाशिने ।
को हि नाम शरीराय धर्मापेतं समाचरेत् ? ॥ १२८ ॥
जलान्तश्चन्द्रचपलं जीवितं खलु देहिनाम् ।
तथाविधमिति ज्ञात्वा शश्वत्कल्याणमाचरेत् ॥ १२९ ॥
मृगतृष्णासमं वीक्ष्य संसारं क्षणभङ्गुरम् ।
सज्जनैः संगतं कुर्याद्धर्माय च सुखाय च ॥ १३० ॥

तन्मम संमतेन तदेव क्रियताम् । यतः,–

अश्वमेधसहस्राणि सत्यं च तुलया कृतम् ।
अश्वमेधसहस्राद्धि सत्यमेवातिरिच्यते ॥ १३१ ॥

अतः सत्याभिधानदिव्यपुरःसरयोरप्यनयोर्भूपालयोः काञ्चनाभिधानसंधिर्विधीयताम्' । सर्वज्ञो ब्रूते–'एवमस्तु' । ततो राजहंसेन राज्ञा वस्त्रालंकारोपहारैः स मन्त्री दूरदर्शी पूजितः । ततः प्रहृष्टमनाश्चक्रवाकं गृहीत्वा राज्ञो मयूरस्य संनिधानं गतः । तत्र चित्रवर्णेन राज्ञा सर्वज्ञो गृध्रवचनाद्बहुमानदानपुरःसरं संभाषितस्तथाविधं संधिं स्वीकृत्य राजहंससमीपं प्रस्थापितः । दूरदर्शी ब्रूते–'देव ! सिद्धं नः समीहितम् । इदानीं स्वस्थानमेव विन्ध्याचलं व्यावृत्य प्रतिगम्यताम् । अथ सर्वे स्वस्थानं प्राप्य मनोभिलषितं फलमनुभवन्ति ।

विष्णुशर्मणोक्तम्–'अपरं किं कथयामि ? कथ्यताम्' । राजपुत्रा ऊचुः–'आर्य ! भवत्प्रसादाद्राज्यव्यवहाराङ्गं ज्ञातम् । ततः सुखिनो भूता वयम्' ।

विष्णुशर्मोवाच — 'यद्यप्येवं तथाप्यपरमपीदमस्तु,—

संधिः सर्वमहीभुजां विजयिनामस्तु प्रमोदः सदा
सन्तः सन्तु निरापदः सुकृतिनां कीर्तिश्चिरं वर्धताम्।
नीतिर्वारविलासिनीव सततं वक्षःस्थले संस्थिता
वक्त्रं चुम्बतु मन्त्रिणामहरहो भूयान्महानुत्सवः ॥ १३२ ॥

अन्यच्चास्तु,—

प्रालेयाद्रेः सुतायाः प्रणयनिवसतिश्चन्द्रमौलिः स याव-
द्यावल्लक्ष्मीर्मुरारेर्जलद इव तडिन्मानसे विस्फुरन्ती।
यावत्स्वर्णाचलोऽयं दवदहनसमो यस्य सूर्यः स्फुलिङ्ग-
स्तावन्नारायणेन प्रचरतु रचितः संग्रहोऽयं कथानाम् ॥१३३॥

अपरं च,—

श्रीमान्धवलचन्द्रोऽसौ जीयान्माण्डलिको रिपून्।
येनायं संग्रहो यत्नाल्लेखयित्वा प्रचारितः ॥ १३४ ॥

इति हितोपदेशे संधिर्नाम चतुर्थः कथासंग्रहः समाप्तः ॥

समाप्तोऽयं हितोपदेशः ॥

# हितोपदेशगतश्लोकानुक्रमणिका।

## सङ्ग्राह्याश्छात्रोपयोगिग्रन्थाः

**पञ्चतन्त्रम्**—विष्णुशर्मसंकलितम्, पं० नारायण राम आचार्य-प्रणीतया सरलाख्यसुगमटीकया विषयकथाकोश-पद्यानुक्रमकोशादिभिः प्रो. डी. डी. कोसंबीमहाशयानां मार्मिकप्रास्ताविकेन च सनाथीकृतम्। गुडजिह्विका यथा शिशूनौषधग्रहणे प्रवर्तयति तथैव ग्रन्थोऽयं नीति-व्यवहार-चातुर्य-कर्तव्याद्युद्बोधकमनोहारिकथानकैः सुरभारतीज्ञानं सुकुमारमतीनप्यन्तेवासिनोऽल्पेनैव समयेन ग्राहयति व्यवहारशास्त्रनिपुणांश्चैकसमयावच्छेदेन विदधातीत्यस्य प्रसिद्धिः। मूल्यम् ४ रूप्यकाः

**रघुवंशम्**—महाकविकालिदासविरचितं, मल्लिनाथकृतसंजीविनीटीकया, वल्लभ–हेमाद्रि–दिनकरमिश्र–चारित्रवर्धन–सुमतिविजयादिटीकाविशिष्टांशैः, रघुवंशसार-पाठान्तर–विविधपरिशिष्टादिभिः, प्रो० हरि दामोदर वेलणकर एम्. ए. महोदयानां सहृदयहृदयाह्लादकयांग्लभूमिकया च समुल्लसितम्।

मूल्यम् ४॥ रूप्यकाः

**धातुरूपावलिः** ,, ८ आणकाः

**शब्दरूपावलिः** ,, ३ आणकाः

**रामचंद्रिका**—(गुंजीकरकृतसंस्कृतशब्दरूपावलिः)

मूल्यम् ८ आणकाः

**लघुसिद्धान्तकौमुदी**—वरदराजकृता, टिप्पणीसहिता

मूल्यम् १। रूप्यकः

**अभिज्ञानशाकुंतलम्**—(सटीकम्) वङ्गीयप्राचीनतमपाठादिभिरुपबृंहितम्। मूल्यम् ३॥ रूप्यकाः

**अमरुशतकम्**—अमरुककविविरचितम्, अर्जुनवर्मदेवप्रणीतरसिकसंजीविनीव्याख्यासहितम्। मूल्यम् १॥ रूप्यकः

निर्णयसागर प्रेस, मुंबई नं. २

